अस्त्यस्मिन्महसां महानिधिरसौ
देवो विवस्वान् महान्
यस्मिञ्जाग्रति जाग्रतीव रजनी-
सुप्ता इमे जन्मिनः ।
किन्त्वेका महती ततो विजयते
श्रीदैशिकाङ्घ्रिद्युति-
र्यद्भासाच्छुरितं चिरन्तनतमो
हित्वैव जागर्ति सत् ।।१।।

ऊर्जस्य शुक्ले च तिथौ चतुर्थ्यां
जगज्जिगीषून् स्वत् ऊर्जयन्तः ।
आविर्बभूवुर्महताबकाकाः
काश्मीरकण्डाभिधजन्मभूमौ।।२।।

येऽस्माननेकानभिधाय दिव्यं
ज्ञानञ्च जग्मुर्निजधाममध्ये ।
तपस्य शुक्लस्य तिथौ द्वितीये
सूर्याब्जयोः सन्धिमयेऽप्यनेहसि ।।३।।

अद्यापि येऽस्मानभिबोधयन्ति
प्रयाणरूपेण निजेन कर्मणा ।

प्रकाशरूपप्रथितैकधाम्नि
रवीन्दुमध्ये जहतः शरीरम् ।।४।।
यज्जन्मना शर्मणगोष्यवात्स्य-
गोत्रं तथागोत्रमवापि लोके ।
अभ्युन्नतिं लोकहितैकहेतुं
सर्वासु दिक्षु प्रसरत्प्रभावाम् ।।५।।
तानद्य सर्वेवयमाविशन्तो
गुरून्स्मरन्तो मनसाथ वाचा ।
विशुद्धभक्त्या प्रणता नमामः
स्थिताञ्च ज्ञानप्रभयागतानपि ।।६।।
तज्ज्ञानगोत्रे गुरवश्चकासति
ज्ञानप्रभाभिः प्रसृताभिरद्य ।
श्रीलक्ष्मणाख्या नमतां जनानां
दृष्ट्यैव दृष्टेस्तमसां विघातकाः ।।७।।
स्वात्मनिष्ठं गुरुश्रेष्टं भवसागरतारकम् ।
श्रीरामस्य प्रियशिष्यं महताबकाकमहं भजे ।।८।।
बुद्धिवृद्धं वयोवृद्धं त्रिकसारस्यवेदकम् ।
प्रहसन्तं गुरुं वन्दे सर्वानुग्रहकारकम् ।।९।।

तेजोमयं सदा शान्तं त्रिकसागरपारगम् ।
दयावन्तं च तत्त्वज्ञं संसारभयनाशकम् ।।१०।।
पञ्चकृत्यकरं वन्दे शक्तिचक्रेश्वरं विभुम् ।
विश्वंस्वात्मनि पश्यन्तमात्मानं सर्वगं तथा ।।११।।
महात्मानं महताबकाकं शरणागतवत्सलम् ।
नमामि बुद्धिमन्तं तं सर्वशास्त्र विशारदम् ।।१२।।
यस्य स्मरण मात्रेण दुस्तरो भेदसागरः ।
निलीयते क्षणेनैव मुक्तिदं तं गुरुं श्रये ।।१३।।